# व्याकरणबोधः ।

संक्षिप्तटीकान्वित ।

प्रथमभाग ।

पण्डितकन्हैयालालत्रिपाठिना

पाटलीपुत्रस्थराजकीयपाठशालाचतुर्थसंस्कृताध्यापकेन

विरचित ।

# VYAKARAN BODH

WITH SHORT NOTES

PART I

*Containing Methods of Cases, Samasas, Change of Voices and Conjugation of Important Verbs &c.*

BY

PUNDIT KANHAIYA LAL TRIPATHI

*4th Pundit Patna Collegiate School*

PRINTED BY SA... PRASAD SINHA & KHADGA VILAS PRESS

BANKIPORE

6)

THIS LITTLE BOOK

IS

DEDICATED

TO

THE LATE BABU BHOOP SEN SINHA B.A. B.L.
GOVT. PLEADER OF GAYA

AS

A TOKEN OF REGARD FOR HIS LOVE FOR THE
SANSKRIT LANGUAGE

BY THE AUTHOR

# PREFACE



Babu Ram Prakas Sen Sinha Zemindar of B[illegible] (Gaya) considering that the Sanskrit Grammars existing at present are not easily comprehensible to young students requested me to prepare a grammar of the Sanskrit language which may remove the difficulties of reading for the Entrance and F A Examination

So at his request this little book has been prepared with a view to remove to a certain extent the difficulties of the students The other parts will soon follow

To aid the memory of the students and to facilitate its being got up by them, the rules have been stated in simple Sanskrit poetry

The cases of nouns have been fully dealt with, according to Siddhant Kaumudi Samasas, conjugations of important verbs and rules for changing their voices are fully given in this little book and whereby difficulties of students have been considerably made easy

If this little book be found to combine usefulness and simplicity it will have attained its aim and I shall consider my labour amply repaid

BANKIPORE
*The 20th August*
*1890*

KANHAIYA LAL TRIPATHI

## वंशवर्णनम् ।

महावर्तोत्तरस्मिन् दिग्विभागे गोरीग्रामः कान्यकुब्जे प्रसिद्धः ।
रम्यो विद्वद्वर्य्यवृन्दैर्युतोहि षट्क्रोशान्ते कान्तहर्म्यान्वितोऽस्मिन् ॥१॥
तत्राभवद् धर्म्मभृतां पुरोगः पवित्रकीर्त्तिर्द्विजराजमान्यः ।
त्रिपाठिवर्य्यः श्रुतपारदृश्वा श्रीमेविलालः सत्कुलाग्रतमः ॥२॥
ततोऽभवद् वंशकरः प्रवीणः श्रीरामलालः सुधियां वरेण्यः ।
दिगन्तसामन्तशिरोमणीनां प्रभाप्ररोहैः स्फुरिताङ्घ्रिपद्मः ॥३॥
समस्तविद्यार्णवपारगेण येनानुविद्यार्जितकीर्त्तिवृन्दैः ।
सुधाकरेणेव मयूखजालैः शुभ्रीकृता सर्वदिगन्तभूमिः ॥४॥
ततोऽप्यजायन्त समानसाराः पुत्रास्त्रयस्तद्गुणरूपतुल्याः ।
यैरात्मकीर्त्या विविधैर्गुणैश्च वशीकृताः सर्वनृपा महान्तः ॥५॥
तत्रापि रामस्तुलसीतिपूर्वो ज्येष्ठो महात्मा सुतरां दयालुः ।
श्रीशम्भुपादाम्बुजसक्तचेता विद्वज्जनाराधनलब्धकीर्तिः ॥६॥
यः स्वप्रतापेन गुणैश्च रम्यैर्नीत्या च पौरान् सकलान् जिगाय ।
दिगन्तसङ्गीतविशालकीर्त्तीन् विद्वज्जनांश्चात्मवशं निनाय ॥७॥
श्रीकृष्णशर्म्मा च विनम्रमूर्त्तिर्ज्येष्ठस्तथा श्रीसुखवासिशर्म्मा ।
पुत्रावुभौ तस्य समानशीलौ विद्याचणौ वै सुधियामभूताम् ॥८॥
यः पाटलीपुत्रपुरस्थविद्यासुमन्दिरे शिष्यगणान् द्वितीयः ।
अध्यापयन्नत्र हि राजकीये प्रोफेसराख्यां पदवीं प्रपन्नः ॥९॥
विद्याकरस्तस्य कनिष्ठबन्धुः श्रीद्वारकादत्त इति प्रसिद्धः ।
प्रियम्वदो मे जनको महात्मा तत्रैव चक्रे वसतिं सभ्रात्रा ॥१०॥
तदात्मजेनैव गुरुप्रसादात् श्रीकृष्णदत्तेन मया व्यधायि ।
त्रिपाठिना व्याकरणप्रबोधश्छात्राशुबोधाय मुदे बुधानाम् ॥११॥

## प्रार्थना ।

सर्गेऽथवा निर्मितिसन्निधौ वा किञ्चिन्मदीयं स्खलनं यदत्र ।
तत् क्षम्यतां वै सुजनैर्दयार्द्रैः स्थिरं याचे विबुधान् विनीतः ।

कृष्णदत्तस्त्रिपाठी ।

# व्याकरणबोधः ।

प्रणम्य शारदां देवीं कृपादत्तत्रिपाठिना ।
क्रियते छात्रबोधाय मया कारकचन्द्रिका ॥

*कारक प्रकरणम् ।

स्यात् प्रातिपदिकार्थे हि लिङ्गसङ्ख्याप्रमाणके
विभक्तिः[1] प्रथमा नित्यं विभुर्ज्ञानं यथा लता ॥१॥
नियतोपस्थिति र्यस्य स प्रातिपदिकार्थकः ।
नित्यलिङ्गा अलिङ्गाश्च तस्योदाहरणं मतम् ॥२॥
एको द्वौ बहवो द्रोणो[2] व्रीहिरित्यादयो यथा ।
सम्बोधनेऽपि सा ज्ञेया यथा हेराम हे विभो ॥३॥
निपातेनापि[3] सम्प्रोक्ता विभक्तिः प्रथमा यथा ।
भवन्तं मन्यते लोको विद्वानिति यथार्थतः ॥४॥

---

* "कर्ता कर्म करणं च सम्प्रदानं तथैव च ।
अपादानाधिकरणमित्याहुः कारकाणि षट्" ॥

१ यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थिति स प्रातिपदिकार्थ इति निर्गलितार्थः ।

२ द्रोणरूप यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः ।

३ अत्र निपातशब्देन इत्यादय शब्दा ज्ञेया ।

४ यत्र कर्तरि प्रत्ययो भवति तत्र कर्ता, उक्तश्च, कर्म

"अशून् अगमयत् स्वर्गं वेदार्थं स्वानवेदयत्।
आशयच्चामृतं देवान् वेदमध्यापयद्विधिम्।
आसयत् सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः॥" ॥१६
नीवह्योर्नैव पूर्वोक्तविधिः कार्यः कदाचन।
नाययति प्रभुर्भृत्यैर्वाहयत्याशु वा भरम् ॥१७॥
आदिखाद्योर्न पूर्वोक्तो विधिः कार्यो मनीषिभिः।
बटुना आदयत्यन्नं खादयत्यथवा पिता ॥१८॥
नियन्तृकर्तृकस्यात्र न निषेधो वहेर्मतः।
वाहयति यथा वाहान् रथं सूतस्त्वरान्वितः ॥१९॥
देशकालादिभिन्नं यैः येषां कर्म न दृश्यते।
अत्र तेऽकर्मका ज्ञेया धातवः पूर्वकर्मणि ॥२०॥

---

१६ यथा भक्ताः स्वर्गमगच्छन् तान् हरिः प्रैरयदिति वाक्यतो हरिः भक्तान् स्वर्गमगमयत्। ते वेदार्थमविदन् तान् हरिः प्रैरयदिति हरिर्वेदार्थं स्वानवेदयत्। देवा अमृतमश्नन्, विधिर्वेदमध्यैत, पृथ्वी सलिले आस्त, इति वाक्येषु पूर्वोक्तान् देवादीन् कर्तॄन् हरिः प्रैरयदिति वाक्यतो हरिर्देवानमृतमाशयत्, विधिं वेदमध्यापयत्, पृथ्वीं सलिले आसयदिति सर्वेषामणिजन्तकर्तृषु अणुप्रसुखेषु णिजन्तावस्थायां द्वितीयैव भवति। हरिरयमर्थः सर्व-क्रियापदानां कर्तृपदस्थानत्वमिति दिक्।

१७ नीवह्यादिदितिधातूनां णिजन्तेऽणिजन्तकर्तरि पूर्वोक्तविधिर्द्वितीयेत्याकारम् न भवति, अपितु तृतीया विभक्तिर्भवति।

२० पूर्वं कार्यं

अविवक्षितकर्म्माणो धातवो मात्र संमताः ।
अह्मणो देवदत्तेन पाचयत्यत्र नो विधिः ॥२१॥
अल्पार्थानां हृग्रोश्चैव पूर्वकर्त्ताऽथ कर्म्मभाक् ।
आपयति यथा पुत्रं जनको धर्म्मसंहिताम् ॥२२
दर्शयति हरिं भक्तान् गुरुः सर्वार्थदो भुवि ।
जल्पयति यथा गाथा देवदत्तं स्वबालकम् ॥२३॥
हृक्रोर्वा कर्म्मसंज्ञः स्यात् पूर्वकर्त्ताऽथ णौ यथा ।
दासं दासेन वा भारं हारयत्याशु मानवः ॥२४॥
अभिवादिदृशो पूर्वविधिः स्यात् आत्मनेपदे ।
अभिवादयते देवं भक्तं भक्तेन वा गुरुः ॥२५॥
शीङ्स्थासामधिपूर्वाणां आधारः कर्म्मसंज्ञकः ।
अधिशेते हरिः स्वर्गमध्यास्ते वाधितिष्ठति ॥२६॥
अभिनिह्नन्दपूर्वस्याधारः कर्म्म विशो मतः ।
अभिनिविशते लोकाः सन्मार्गं राजशासनात् ॥२७
क्वचिन्नो कर्म्मसंज्ञः स्यादाधारस्तस्यनिश्चितम् ।
अभिनिवेश एव स्यात्पापे यस्य, स पातकी ॥२८॥

---

२४ हृधातो कृधातोर्वा णिजन्तकर्त्तु र्णिजन्ते कर्म्मसंज्ञा वा भवति । यदाकर्म्मसंज्ञा, अणिजन्तकर्त्तुर्नभवति तदा तत्र तृतीया विभक्तिरेव भवतीति विशदार्थः

२५ अभिपूर्वस्य वादिधातोर्दृशिधातोश्चात्मनेपदेऽणिजन्तकर्त्तुः कर्म्मसंज्ञा णिजन्ते वा भवति । कर्म्मसंज्ञाभावे तत्र तृतीयेद-
ष्टव्या ।

उपान्वध्याङ्पुरोगस्याधारः कर्म्म वसोगतः ।
अध्युवास हरिर्भूमिं तद्भारोद्धरणाय वै ॥२८॥
अभुक्त्यर्थस्य चाधारो वसधातोर्न कर्म्मभाक् ।
उपावसति कृष्णोऽसौ वने गोचारहेतवे ॥३०॥
"उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" ॥३१
गोपा उभयतः कृष्ण सर्वतः सन्ति नित्यशः ।
कृष्णाभक्तं तु धिग्लोके लोभिनधिक्चमानव ॥३२
उपर्य्युपरि लोकं चाऽधोऽधोऽध्यधि हरिं विभुं ।
परिभ्रन् जनान् नित्यं सुहृत्तान् शास्ति दण्डतः ३३
अन्तरेणान्तरायोगे निकषा समया तथा ।
अभितः परितो नित्यं द्वितीया स्यात्प्रतेरपि ॥३४॥
अन्तरेण श्रमं विद्या लभ्यते नैव केनचित् ।
अन्तरा त्वां च मां विष्णुं निकषा समया गिरिम् ३५
अभितः परितो गङ्गां साधवो निवसन्ति वै ।
विष्णुं प्रतिसुराः सर्वे जग्मू रावणपीडिताः ॥३६॥
लक्षणे लक्षितेऽनुश्च मततं कर्म्मसंज्ञकः ।
द्वितीया स्यात् यथा तत्र जपं प्रावर्षदाश्वनु ॥३७॥

---

३३ ईश्वरो दण्डेनोद्धृत्तानुन्मार्गगामिनो लोकान् शास्ति दण्डयतीत्यर्थः ।

३५ निकषा समयेतिपदद्वयं समीपार्थबोधकमव्ययम् ।

३७ लकारादिष्वभूतकथने भागे वीप्सायाञ्च प्रतिपर्य्यनु, योगे द्वितीया विभक्तिर्भवति । हेतुभूतजपोपलक्षितं वर्षणमि त्याशयः । आश्व+अनु, इति पदच्छेदस्यात्रकार्य्यः ।

तृतीयार्थेऽनुरुक्तः स्यात् सेनान्वसमिता सर ।
अनु विष्णु सुरा नित्य हीनार्थेऽपि तथा विधः ३८
इत्थ भूतविधानेऽर्थे लक्षणे भागवीप्सयो ।
पर्य्यनुप्रतियोगे हि द्वितीया सर्वसम्मता ॥३९॥
सौदामिनी यथा भाति वृक्षं पर्य्यनु वा प्रति ।
प्रति, सिञ्चति कोऽप्ययं पर्य्यनु वा तरु तरुम ॥४०
पर्य्यनु प्रति रामं वा भक्तो धावति चेतसा ।
रुद्राणी शङ्करं पर्य्यनुप्रति वा यथा स्मृता ॥४१॥
लक्षणे भागवर्जेऽपि द्वितीया चाभियोगतः ।
अभि विष्णुं ययु सर्वे देवा इन्द्रपुरःसरा ॥४२॥
अतिक्रमे च पूजायां द्वितीया वाऽति योगतः ।
अति देवान् विभु कृपयाऽति रोगान् जयी यथा ४३
पदार्थान्ववसर्गे च गर्हासम्भावने तथा ।
समुच्चय इति द्योत्येऽप्यर्थेऽपि कर्मसञ्ज्ञक ॥४४॥

---

३८ सरता धाक सम्बद्धेति फलितार्थं, सुरा सर्वथा विष्णो हीना इत्यर्थं ।

४१ पार्वती महादेवस्य भाग इत्याशय ।

४२ अभियोगत, अभियोगेनेत्यर्थ (अभियोग+तसिप्रत्यय)

४४ पदार्थो वस्तुमात्र अन्ववसर्गं कामाचारानुज्ञा, गर्हा निन्दा, सम्भावन शक्त्युत्कर्षमाविष्कर्तुमित्युक्ति, समुच्चय समुदाय इत्यर्थबोधकस्यापि शब्दस्ययोगत द्वितीया विभक्तिर्भवति। क्रमशस्तदुदाहरणानिप्रदर्श्यन्ते यथा सर्पिषोऽपिस्यात, अपि स्तुया महादेवम । अपिसुञ्च । धिग्देवदत्तमपिस्तु॰ ...

कालाध्वनो द्वितीया स्यादत्यन्तसंयोगतो यथा ।
मासं पठति बालोऽयं क्रोशं कुटिला सरित् ४५

तृतीयाविभक्ति ।

स्वतन्त्रेण क्रियाया वि-वक्षितोऽर्थस्तु कर्तृभाक् ।
साध्यते च क्रिया येन कर्त्रा तत्करणं मतम् ॥१॥
रामचन्द्रः प्रियोपेतो वालिं बाणेनचावधीत् ।
सुग्रीवस्तु स्वनाशाय स्वात्मानं गोपयन् पुरा ॥२॥
कर्तरि कारकेऽनुक्ते तृतीया करणे तथा ।
असिना निहतश्छाग धातुकेन यथा तथा ॥ ३ ।
प्रकृत्यादिभ्य एवस्या-तृतीयासर्वसम्मता ।
प्रायेण याज्ञिकोऽयं, गो. प्रकृत्या मधुरं पयः ॥४॥
सुसाधकतमं कर्म करणं च द्विधोमतम् ।
अक्षैर्दीव्यति धूर्तोऽयमक्षान् वा शकुनिर्यथा ॥५॥
अपवर्गे तृतीयास्यात्दृष्टा क्रोशेन वा यथा ।
पन्थोऽयं पठितस्तेन गन्तुकामेन सत्वरं ॥ ६ ॥

---

अधिसिद्ध, अधिसृ, [illegible] । [illegible] [illegible] कर्मप्रवचनीयस्य [illegible] परो ज्ञातव्य ।

४५ समयमार्गवाचकानां पदानामत्यन्तसंयोगे तत्र द्विती या विभक्तिर्भवति ।

६ अत्रापवर्गे फलप्राप्तिसमये, यत्र क्रियासमाप्ति स्तत्फल प्राप्तिश्च तत्रैव तृतीया विभक्तिर्नान्यत्र । यथा वर्षं पठितो नाया तोऽत्र क्रियासमाप्ति कथ्यते, नहि तत्फलप्राप्ति । अतएव अ[illegible] सिद्ध्यम द्वितीयैव भवति नतु तृतीया, इति फलितार्थं ।

महार्थेनाप्रधाने वै तृतीया योगतो मता ।
लक्ष्मणेन सहायासीच्छ्रीमान् रामो वनं मुदा ॥७॥
लक्ष्यते विकृताङ्गेन साऽङ्गिनो विकृतिर्यदा ।
पृष्ठेनास्ति गतो कुब्ज., काणो नेत्रेण वा यथा ॥८॥
इत्थमाचरणाद् यत्र व्यक्तिबोधः प्रजायते ।
तृतीया तत्र विज्ञेया जटाभिस्तापसो यथा ॥९॥
दाधातो संविशिष्टस्य तृतीया कर्मणि स्मृता ।
जनकेन जनक चापि स जानीते सुतोऽनघः ॥१०॥
हेत्वर्थेऽपि तृतीया स्याद् दण्डेन क्रियते घट. ।
हृष्टो विप्राः सुपुण्येना-ध्ययनेन द्विजोऽवसत् ॥११॥
गम्यमाना क्रियापि स्यात्कारके च प्रयोजिका ।
अल श्रमेण भोगिन्द्रन् दुर्लभे विषये सदा ॥१२॥
अशिष्टव्यवहारे स्याद दाधातो. स प्रयोगत ।
चतुर्थ्यर्थे तृतीयेव, दास्या स यच्छते विट ॥१३॥
धर्मार्थेतु चतुर्थ्येव ज्ञेया नित्यं बुधैर्यथा ।
भार्यायै नित्यमुत्कण्ठ स यच्छति धनप्रिय ॥१४॥

---

८ येनाङ्गेन देहिनो विकारो जायते तस्मिन्नङ्गे तृतीया विभक्तिर्भवतीतिफलितार्थः ।

१० संपूर्वस्य ज्ञाधातो कर्मणि तृतीया विभक्तिर्विकल्पेन भवतीत्यर्थः ।

११ दाधातुरत्र दाण्धातुपरो ज्ञातव्य ।

चतुर्थीविभक्तिः ।

यमभिप्रैति दानस्य संप्रदानं स कर्मणा ।
धेनुं दत्ते सुविप्राय सन्निर्दिष्टाय दीयते ॥ १ ॥
क्रियया यमभिप्रैति सम्प्रदानं प्रकीर्तितम् ।
चतुर्थी तत्र कर्तव्या शेते नारी प्रियाय वा ॥२॥
कर्मणः करणाख्या स्यात् सम्प्रदानस्य कर्म च ।
यजते पशुना रुद्रं पशुं रुद्राय यच्छति ॥३॥
रुच्यर्थानां प्रयोगेऽर्थे प्रीयमाणस्य तन्मतम् ।
रोचते हरये भक्तिः शिशवे मोदको यथा ॥४॥
श्लाघह्नुङ्स्थाशपां योगे, चतुर्थी सम्प्रकीर्तिता ।
कृष्णो बोधयितुं नित्यं, श्लाघते निह्नुतेऽथवा ॥५॥
स्वरात्कृष्णाय गोप्येषा सर्वसौख्याभिलाषिणी ।
स्त्रीस्तनानीति नोक्ते हि रामाय श्लाघते पथि ॥६॥

---

१ सम्यक् प्रदीयतेऽस्मै तत्सम्प्रदानम् । दानस्यापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनमपेक्ष्यते । अतएव रजकस्य वस्त्रं ददातीत्यादौ न भवति ।

२ अत्र यथार्थे वा शब्दोऽयं ।

३ अत्र कर्मणः करणसंज्ञा सम्प्रदानस्य कर्मसंज्ञा च भवति । यथा यजते पशुना रुद्रमिति वाक्यस्य शिवाय पशुं ददातीति निर्गलितार्थो भवति ।

४ रुच्यर्थानां धातूनां प्रयोगे काङ्क्ष्यमाणोऽर्थः सम्प्रदानसंज्ञो भवति । रुचिर्नाम परकर्तृकेच्छा स्मृता । हरिनिष्ठस्नेहस्यानुरागः । तत्सम्बन्धेनास्य सम्प्रदानमुक्तोयम् ।

धृधातोर्हिप्रयोगे स्याच्चतुर्थी चोत्तमर्णके ।
हरिर्धारयते मोक्ष भक्ताय सुप्रपूजित ॥७॥
स्पृहधातुप्रयोगेऽपि सम्प्रदानमभीप्सितम् ।
स्पृहयति प्रसूनेभ्य कामुको मोदहेतवे ॥८॥
ईप्सिते केवलं ज्ञेय, तत्प्रकर्षेच कर्म वै ।
स्पृहयति प्रसूनानि मालाकारो यथावने ॥९॥
क्रुधाद्यर्थक्रियाणां हि योगे कोपस्य य प्रति ।
चतुर्थी तत्र विज्ञेया हरये क्रुध्यति द्विज. ॥१०॥
कोपो यत्र न सत्य स्याद् द्वितीया तत्र सम्मता ।
पत्नीं क्रुध्यति भर्त्तेति नैनापश्येज्जनो यथा ॥११॥
उपसर्गयुक्तयो. कर्म क्रुदद्रुहोस्तत् प्रकीर्तितम् ।
अभिक्रुध्यति साधुं हि प्राभिद्रुह्यति दुर्जन. ॥१२॥

---

७ यो मुक्तिधनादिक प्रयच्छति स उत्तमर्णकोऽवगन्तव्य । योऽमुक्तादिकमादत्ते सोऽधमर्ण ।

९ प्राप्तुमिष्टे विषये विवक्षिते चतुर्थ्येव सम्प्रदानसंज्ञा भवति । तत्प्रदार्थाधिक्येतु तत्रद्वितीया विभक्तिरेव भवतीति तात्पर्य्यम् ।

१० क्रुधद्रुहेर्ष्यासूयाद्यर्थधातूनां योगे य प्रति वास्तविक कोपस्तत्र चतुर्थी भवति । यथा हरये क्रुध्यति, द्रुह्यति, ईर्ष्यति । अत्र क्रोधोऽमर्ष द्रोहोऽपकार , ईर्ष्याऽक्षमा, असूया गुणेषुदोष प्रकाशनमित्यर्थ ।

राधीक्षयोर्य विप्रश्नो यदीयं क्रियते सतः ।
सम्प्रदानं हि, कृष्णायेक्षते राध्यति वा द्विजः ॥१३॥
प्रत्याङ्श्रुक्रियायोगे पूर्वव्यापारस्य कारके ।
चतुर्थी सम्मता, राजाऽऽश्रृणोत्याख्याय गां यथा ॥१४॥
अनुप्रतिसमेतस्य गृधातोः पूर्वकर्तरि ।
चतुर्थी विहिता होत्रेऽनुगृणाति यथा सुचम् ॥१५॥
सम्प्रदानं विभाषा स्याद् भृत्य चात्र परिक्रये ।
परिक्रीतः शतेनाय वा शताय यथा हय ॥१६॥
तादर्थ्येऽपि चतुर्थी स्यान्मुक्तये भजते हरिम् ।
कूपिम पद्यमानेनोत्पातेन ज्ञापिते तथा ॥१७॥

---

१३ राध ईक्षेति धात्वोर्यदीयो नानाविध प्रश्नः क्रियते तत्र चतुर्थी । जिज्ञासितो द्विजः कृष्णस्य वर्षं शुभाशुभं विचारयतीति विशदार्थः ।

१४ प्रत्याङ्पूर्वकस्य श्रुधातोः पूर्वव्यापारस्य कर्तरि चतुर्थी स्यात् । यथा राजा आख्यायगामाश्रृणोतीति वाक्यस्य, मह्यं धेनु देहीत्यर्थेन प्रेरितो राजा प्रतिजानीते इति फलितार्थः

१५ अनुप्रतिपूर्वस्य गृधातोः पूर्वव्यापारस्य कर्तृभूते कारके चतुर्थी भवतीत्याशयः । होता प्रथमं शंसयति तमन्य प्रोत्साहयतीत्यर्थः ।

१६ नियतकालाय स्वाधीनीकरणं परिक्रयस्तत्र साधकतमे कारके चतुर्थीविभक्तिरिति फलितार्थः ।

ज्ञानाय कल्पते भक्तिः पीता * वर्षाय कल्पता ।
हितयोगेऽपि सा प्रोक्ता छात्रायाध्ययनं हितम् ॥१८
क्रियार्थोपपदस्यास्य स्थानिनः कर्मणि ध्रुवम् ।
चतुर्थी, याति पुष्पाय नमस्कुर्मो भवाय च ॥१९॥
तुमर्थे भाववाच्ये च चतुर्थी संप्रकीर्तिता ।
स्नानाय याति लोकोऽय स्नातु यातीति वाक्यम्. २०
नमः स्वस्ति स्वधा स्वाहाऽलं वषड्योगनाञ्च सा ।
नमो देवाय चेन्द्राय वषट् स्वाहाग्नये यथा ॥२१॥
जीववर्जे चतुर्थी वा मन्यकर्मण्यनादरे ।
मत्वा तृणं तृणायाशु राज्यं, रामोवनं गतः ॥२२॥
प्राणिस्वेऽपि क्वचित्सा, त्वां श्वानमन्ये शुने न वा ।
संजीवेऽपि क्वचित्सा नो न त्वा मन्ये श्वं यथा ॥२३

---

* वाताय कपिला विद्युदातपायातिलोहिता ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥
इति भाष्योक्त श्लोकवार्तिकम् ।

१९ क्रियार्था क्रिया, उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी भवति । पुष्पाय पुष्पमाहर्तुं गच्छतीत्यर्थः । भवाय, शङ्करमनुकूलयितुं प्रणमतीति फलितार्थः ।

२१ चकारात्पर्थ्याप्त्यर्थग्रहणम् । अलमभूपचपर्थ्याप्तिप्रक्ति दारण्याचक्रमिति बोधात् ।

२२ प्राणिवर्जे मनधातोः कर्मणि चतुर्थी, अपमानेऽर्थे चतुर्थ्येव विधाया भवतीत्यर्थः ।

गमनार्थकधातूनां चतुर्थी कर्मणि स्मृता ।
चेष्टायां वा, गतो रामो वनाय पितुराज्ञया ॥२४॥
अचेष्टायां न तद्योगे चतुर्थी च प्रकीर्तिता ।
मुद्रिताक्षो यथा योगी जगाम मनसा हरिम् ॥२५

अपादानम् ।

विश्लेषे जायमानेऽवधीभूतं हि कारकम् ।
अपादानं ध्रुवं प्रोक्तं विभक्तिस्तत्र पञ्चमी ॥१॥
यथा पतन्ति पुष्पाणि वृक्षवृन्तात् समन्ततः ।
धावतो वाजिनस्तूर्णं पतितो मानवोऽपटुः ॥२॥
निन्दाप्रमादवैराग्या-र्थानां योगे तु पञ्चमी ।
पापाज्जुगुप्सते स्वामी, धर्मान्नापि प्रमाद्यति ॥३
भयत्राणार्थधातूनां तद्धेतौ पञ्चमी मता ।
चोराद् भीतो यथा नित्यं त्रायते स्वं धनं नरः ॥४
परापूर्वस्य जयते रसह्यार्थेऽपि पञ्चमी ।
अध्ययनात्पराजिग्ये ऽलसश्छात्रो न संशयः ॥५॥

२४ चेष्टायां विशेष, यदगन्त्राधिष्ठितो मार्गस्तत्र चतुर्थी न भवति । यथा मार्गं गच्छति । अन्यस्थले तु वा भवत्येव यथोत्पथेन मार्गाय याति ।

१ विश्लेषे साध्ये निश्चितमवधिभूतं कारकमपादानसंज्ञकं भवति तत्र पञ्चमी विभक्तिः ।

३ विरामं चलं वैराग्यं दृढत्वं स्वार्थेऽपि प्रतायं ।

५ अध्ययनात् ग्लानिं प्राप्तस्तत्र ।

मारणार्थकधातूनां सोऽपि तेऽर्थेऽपि सा मता ।
यवेभ्यो याज्ञिको नित्यं धेनुं वारयति द्विज ॥६॥
आत्मनोऽदर्शनं यस्माद् व्यवधाने तत्र पञ्चमी ।
गोपान्निलीयते कृष्णः कौतुकी गोदृहेतवे ॥७॥
गृह्णाति विद्या नियमानुसारं
यस्माद्विनीतः खलु यत्र लोके ।
सा पञ्चमी वक्ति तत्र वेद्या
गुरोरधीतेऽथ यथार्थशास्त्रम् ॥८॥
जनिभूकर्तृके हेतौ पञ्चमी भवति ध्रुवम् ।
प्रजायन्ते प्रजाः सर्वा ब्रह्मणो विदुषो यथा ॥ ९ ॥
सर्वदुःखापहा गङ्गा भुक्तिमुक्तिप्रदायिनी ।
हिमालयात्समभूता पुनाति सकलं जगत् ॥ १० ॥
ल्यब्लोपे पञ्चमी कर्मण्याधारे च निगद्यते ।
प्रासादादामनाल्लोकं आयान्तं प्रसमीक्षते ॥११॥
यतः कालाध्वनिर्माणं पञ्चमी तत्र चेष्यते ।
तद्युक्तादध्वनः सप्तमी प्रथमा च कीर्तिता ॥ १२ ॥

---

७ व्यवधाने सति यत्कर्तृकस्य स्वस्यादर्शनस्याभय ऑद्यते तत्कारकस्य पञ्चमी भवतीति विशदार्थः ।

८ कार्यमात्रस्य हेतुर्भूकर्तुश्च प्रभवोऽपादान संज्ञको भवति । तत्र पञ्चमी विभक्तिरित्यर्थः ।

१२ प्रासादमारुह्य, आसने उपविश्यागच्छन्तंपुरुषं पश्यतीत्याशय ।

पञ्चमी हेतुभूते स्याद्दृणेऽकर्तरि कारके ।
शताद्बद्धो जनो दीन, करुण रोदिति मुहुर्मुहुः ॥२०॥
अस्त्रीलिङ्गे गुणे हेतौ पञ्चमी वा निगद्यते ।
जाड्याज्जाड्येन वा बद्धो यथा शोचति मानव. ॥२१॥
अगुणेऽपि क्वचित्प्रोक्ता पञ्चमी विबुधै. स्त्रियाम् ।
अग्निमान् पर्वतो धूमा दप्राप्ते र्नास्ति वा घट ॥२२॥
विना नाना पृथग्योगैस्तृतीया पञ्चमी मता ।
द्वितीया च, विना रामं रामाद्रामेण वा यथा ॥२३॥
दूरान्तिकार्थशब्देभ्य स्तिस्र पूर्वा विभक्तय'॥
दूराद्दूरेण दूरं वा ग्रामादास्ते मुनीश्वर ॥२४॥
क्वच्छस्तोकाल्पशब्देभ्योऽद्रव्यार्थेभ्यस्तथा मता ।
तृतीया पञ्चमी चैव कृच्छ्रात्कृच्छ्रेण वा गत ॥२५

षष्ठी विभक्ति ।

कारकोक्तार्थभिन्नेऽर्थे स्वत्वसम्बन्धवाचकैः ।
षष्ठी शेषे मता ज्ञेया, राज्ञ सेना समागता ॥१॥

---

२० कर्तृवर्जिते कारणे हेतुभूते पञ्चमी भवति । तत्कर्तृपक्षे तृतीयैव स्यात् यथा शतेनबद्ध ।

२५ स्तोकाल्पकृच्छ्रकतिपयशब्देभ्योऽद्रव्यवाचकेभ्य कारणे तृतीयापञ्चम्यौ भवत । द्रव्यवाचकेतु स्तोकेन गरलेन हतो जनइति ।

१ कारकप्रातिपदिकार्थव्यतिरिक्ते स्वस्वामिभावसम्बन्धे शेषेऽर्थेषष्ठी विभक्तिर्भवतीत्यर्थ ।

तथा कर्म्मादिकानां वै सम्बन्धकथनेऽपि सा ।
पितुः स्मरति बालोऽयमब्जनानां गतं यथा ॥२॥
भजते पादयोर्योगी श्रीरामस्य, विमुक्तये ।
षष्ठी हेतुप्रयोगे स्याद्धेतो विंतस्य* यात्यसौ ॥३॥
सर्वनाम्नस्तृतीया वा हेतुयोगे तथा च सा ।
हेतुना केन वासोऽत्र हेतो कस्यापि ते मत ॥४॥
निमित्तार्थप्रयोगेऽपि सर्वा प्रायो विभक्तय ।
किं निमित्तं निमित्तेन केन रामो वनं गत ॥५॥
दूरान्तिकार्थयोगेन षष्ठी चापि निगद्यते ।
दूरं ग्रहस्य गेहाद्वा साधवो निवसन्ति ये ॥६॥
अज्ञानार्थस्य षष्ठी स्याज्ज्ञाधातो. करणे यथा ।
सर्पिषो ज्ञानमस्यास्ति मधुरं ज्ञायते मया ॥७॥
अधीगर्थदयेशास्तु षष्ठी शेषे हि कर्म्मणि ।
जनन्याः स्मरणं नित्यं सर्पिषो दयनं यथा ॥८॥
गुणाधाने कृञः शेषे षष्ठी कर्म्मणि सम्मता ।
यथा काष्ठं जलस्यात्रोपस्करणं प्रकीर्त्तितम् ॥९॥

---

६ दूरान्तिकार्थशब्दैर्योगे षष्ठीविभक्तिर्भवति पञ्चमी च ।

७ अज्ञानार्थकस्य ज्ञाधातोः करणे शेषत्वेन विवक्षिते षष्ठी भवतीति तात्पर्य्यम् ।

८ अधीगर्थस्य स्मरणार्थस्य धातोः, दय, ईशधात्वोश्च शेषे कर्म्मणि षष्ठी विभक्तिर्भवति । यथा कृष्णो मातुः स्मरति । दाता दरिद्रस्य दयते जनकस्तनयस्य ईष्टे ।

भाववाच्यरुजार्थानां मज्वरीणाञ्च कर्म्मणि ।
शेषे षष्ठी मता, चौरस्य रोगस्य रुजा तथा ॥१०॥
आशीरर्थस्य वै नाथः षष्ठी कर्म्मणि वा मता ।
सर्पिषो नाथनं भूयाद्भवतः सततं शुभम् ॥११॥
दिवुधातोस्तदर्थस्य षष्ठी कर्म्मणि तद् यथा ।
मूर्खो दीव्यति जीवार्थं सहस्रस्य निरन्तरम् ॥१२॥
सोपसर्गस्य वा तस्य षष्ठी कर्म्मणि सम्मता ।
शतं शतस्य वा कश्चित्प्रतिदीव्यति मानवः ॥१३॥
कालवाचिनि चाधारे कृत्वोऽर्थानां प्रयोगतः ।
पञ्चकृत्वो जना अह्नः सभ्या कुर्वन्ति भोजनम् ॥१४॥
कृद्योगे कर्त्तरि प्रोक्ता षष्ठी कर्म्मणि वा यथा ।
ईश्वरस्य कृतिः सृष्टिः छेदो वृक्षस्य निष्फलः ॥१५॥
कर्म्मण्येव तदा षष्ठी, प्राप्ति यद्युभयोः कृतिः ।

---

१० भावकर्त्तृकाणां ज्वरिभिन्नानां रुजार्थानां कर्म्मणि शेषे षष्ठी भवतीत्यर्थः

११ आशीरर्थस्य नाथधातोः शेषे कर्म्मणि षष्ठी वा भवति ।

१२ द्यूतार्थस्य क्रयविक्रयरूपव्यापारवाचकस्य दिव्धातोः कर्म्मणि षष्ठी भवतीत्याशयः ।

१३ उपसर्गपूर्वकस्य तस्य दिव्धातोः कर्म्मणि षष्ठी वा भवति ।

१४ कृत्वोऽर्थानां प्रयोगे समयवाचकेऽधिकरणे षष्ठी विभक्तिर्भवतीति फलितार्थः ।

१५ यत्रोभयोः कर्त्तृकर्म्मणोः षष्ठ्याः प्राप्तिर्भवति तदा कर्म्मण्येव षष्ठी कार्य्येत्यर्थः ।

सतोऽय पापको याति, शतं टायी यथा नर, ॥२४
कृत्याना कर्तरि स्याद्वा योगे षष्ठी ध्रुवं यथा ।
पूज्यो विष्णु मया नित्य, मम वाच्च विमुक्तये ॥२५॥
तुल्यार्थैं र्वा तृतीया स्यात् तुला हित्वा-तथोपमाम् ।
समो रामेण रामस्य तुल्यो वा नास्ति कश्चन ॥२६
मद्रभद्रसुखार्थाना हितायुष्ययुजा सदा ।
शब्दाना योगत षष्ठी चतुर्थी च प्रकीर्तिता ॥२७॥
आयुष्य कुशलं भूयाङ्गवती भवतो यथा ।
भद्रं सुख हित पथ्य भूयाद्देव निरामयम् ॥२८॥

सप्तमी विभक्ति ।

क्रियाया कर्तृकर्मत्व द्वारा यत्स्थानक भवेत् ।
स आधार सदाज्ञेय त्रिधा सर्वबुधै र्यथा ॥१॥
कटे शेते कुमारोऽय स्थाल्या पचति, पाचका ।
योगिनो मोक्ष इच्छास्ति ब्रह्मास्ते सर्वजीविषु ॥२॥
दूरान्तिकार्थयोगेन सप्तमी सप्रकीर्तिता ।
पर्णशाला वनस्यान्ते दूरे वासो हियोगिन ॥३॥

---

२६ तुलोपमावर्जितानां तुल्यार्थाना यागे तृतीया भवति पक्षान्तरे षष्ठी भवेतार्थं ।

२७ आशीर्वादविषये आयुष्य मद्रभद्र कुशल सुखार्थहितश ब्दाना योगे षष्ठीचतुर्थ्यौ भवतइत्यर्थं ।

१ औपश्लेषिको वैषयिकोऽभिव्यापकश्चेति आधारस्त्रिविधो भवति । क्रमेण तदुदाहरणानि ज्ञातव्यानि ।

सप्तमी कर्म्मणि ज्ञस्येन्द्रियस्य सुसम्मता ।
अधीती काव्यशास्त्रेऽयं व्याकरणे विशेषतः ॥४॥
साध्वसाधुप्रयोगे च विभक्तिः प्रोक्तपूर्विका ।
साधुः कृष्णो जनन्यां हि त्वसाधुर्मातुले यथा ॥५॥
निमित्तात्कर्म्मयोगे सा, निमित्तस्य फलं स्मृतम् ।
योगः प्रोक्तो हि संयोगः समवायात्मकोऽपि च ॥६॥
त्वचि हन्ति जनो व्याघ्रं हस्तिनं हन्ति दन्तयोः ।
कचेषु चमरीं चैवं पुष्कलं हन्ति सीम्नि च ॥७॥
समवायादृते योगे सप्तमी स्यान्न कर्हिचित् ।
लोको लुनाति धान्यं वै वेतनेन समन्ततः ॥८॥
लक्ष्यते यस्य भावेन भावलक्षणमेव हि ।
सप्तमी स्याद् यथा चौरो जने सुप्ते समागतः ॥९॥
अयोग्यानामकर्तृत्वे कर्तृत्वे च सतां सदा ।
तथा तद्वैपरीत्ये च सप्तमी सम्प्रकीर्तिता ॥१०॥
मुक्तिं गच्छत्सु योग्येषु प्रतीक्षन्ते असज्जनाः ।
सत्सु तिष्ठत्सु चासक्ता लभन्ते वाञ्छितं पदम् ११

---

४ अधीतमनेनेति विग्रहे „ इष्टादिभ्यश्चेति कर्त्तरीनिप्रत्ययः ।

७ अत्र सीम्नाऽण्डकोशः पुष्कलशब्देन गन्धमृगस्य ग्रहणम् ।

८ यदा यस्य क्रियया क्रियान्तरं ज्ञायते तत्र सप्तमी भवति यथा सूर्येऽस्तमिते स गृहं गतः, रवेरस्तगमनसमकालागत इत्यर्थः ।

अनादरे भवत्येव षष्ठी च सप्तमी तथा ।
रुदति रुदतो वापि प्राव्रजत्तनयो यथा ॥१२॥
स्वामीश्वरादियोगे च विभक्ती चोक्तपूर्विके ।
गवां गोषु प्रसूतो वा स्वामी गोषु गवां यथा ॥१३
निर्धारणे यतस्तत्र षष्ठी च सप्तमी मता ।
कवीनां कविषु श्रेष्ठः कालिदासो बुधाग्रणी ॥१४॥
यत्र निर्धार्यमाणस्य विभागः पञ्चमी तत ।
रामः श्रेष्ठतमो जातः सुरेभ्यो भूमिमण्डले ॥१५॥
अर्हे साधुनिपुणाभ्यां योगे स्यात्सप्तमी यथा ।
जनन्यां निपुणः साधुः कृष्णश्चास्ते मुदान्वितः ॥१६
प्रसितोत्सुकयोगेन तृतीया सप्तमी मता ।
उत्सुकः प्रसितो रामे रामेण भक्तिमान् नरः ॥१७॥
शक्तिद्वयस्थकालाध्व योगे स्यात्पञ्चमी तथा ।
विभक्तिः सप्तमी चापि, नात्र कार्या विचारणा ॥१८

---

१२ अनादराधिक भावलक्षणे षष्ठीसप्तम्यौ भवत इत्याशय । रुदन्तं पित्रादिकमनादृत्य पुत्र सन्न्यस्तवानित्यर्थं ।

१३ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतशब्दैर्योगे षष्ठीसप्तम्यौभवत । गा एवानुभवितु जात इत्यर्थं ।

१४ निर्धारणञ्च जातिगुणक्रियासंज्ञाभि समुदायादेकस्य, पृथक् करणम् ।

१८ क्रियाद्वयमध्यवर्त्तिभ्यामध्वकालवाचकशब्दाभ्यां पञ्चमी सप्तम्यौभवत । १८. यथाद्यस्थित धनु क्रोशे क्रोशाद्वा विध्यतीत्यर्थ ।

यदा स्नात्वा नगो गङ्गा स्नाता चाण्डात्चाड्डे यथा ।
विश्लेषमथर पञ्च क्रोशे क्रोशादिष स्थित ॥१९॥
पञ्चिकेन मम योगे पञ्चमी सप्तमी मता ।
क्रोशाद्रोके ऽधिको वार्यं हरि सर्वसुरार्चित ॥२०॥
तर्काब्धिगोभूमितवैक्रमाब्दे ।
मासे मधौ कृष्णदले दशम्याम् ।
आदित्यवारे, कृपया गुरूणा
पूर्णाभवत् कारकचन्द्रिकेयम ॥ २१ ॥

समासप्रकरणम् ।

अतद्धितादीनि पदानि यत्र ।
द्वित्र्यादिकानि प्रथमेत्य नित्यम् ।
एक पद सञ्जनयन्ति यद्धि
विज्ञा समास समुदाहरन्ति ॥ १ ॥
न जायते चैकपदे समासे
सदर्थबोधाय विधीयते यत ।
बुधैस्तु वाक्य खलु विग्रहस्तद्
यथा पर राजत एव राज्ञा ॥ २ ॥
समासयोग्य पदद्वन्द्वमार्या
समस्यमान कथयन्ति तज्ज्ञा ।
कृते समासे पदमस्थिति र्या
पद समस्तन्तमथापि तद्वत् ॥ ३ ॥

समस्यमानस्य पदस्य नित्य
विभक्तिलोपश्च समासकाले ।
पुनः प्रयोगः कथितोऽसमासे
विभक्तिजातस्य मनीषिवृन्दैः ॥ ४ ॥
तत्पुरुषोऽव्ययीभावो द्वन्द्वश्च कर्मधारयः ।
बहुव्रीहिर्द्विगुश्चेति समासः षड्विधो मतः ॥५॥

तत्पुरुष ।

द्विप्रधानो भवेत्तत्र तत्पुरुषो यथार्थतः ।
पूर्वकायोऽन्यकायश्च यथा पूर्वप्रधानकौ ॥ ६ ॥
रामभक्तो निविष्कश्च गुरुसेवापरायणः ।
तथोत्तरपदस्यापि प्राधान्यं ज्ञायतां बुधैः ॥ ७ ॥
द्वितीयान्तं पदं साकं सुबन्तेर्वा समस्यते ।
श्रितादिभिः यथा कृष्णं श्रितः कृष्णश्रितो जनः ॥८॥
तत्कृतार्थैस्तृतीयान्तं गुणैः साकं समस्यते ।
शङ्कुलया यथा खण्डः शङ्कुलाखण्ड उच्यते ॥९॥
कर्तृकरणयोः साकं तृतीयान्तं पदं कृता ।
प्राग्वदा, हरित्रातो नखभिन्नो यथा नरः ॥१०॥
तदर्थेन चतुर्थ्यन्तं पदमर्थादिभिः समम् ।
यूपदारु, यथा प्राग्वद्, गोहितं गोसुखं तथा ॥११॥
नित्यं समासस्त्वर्थेन विशेष्यायत्तलिङ्गता ।
द्विजार्थोऽयं यथा सूपो द्विजार्थञ्च पयोऽमलम् ॥१२॥

४

पञ्चम्यन्त भयेनाव पद चापि समस्यते ।
चौरात्भय यथा चोरभय सर्पभयं तथा ॥१३॥
स्तोकादिभ्यश्च पञ्चम्यायलुक्स्यादुत्तरे पदे ।
अभ्यासादागत कश्चित् स्तोकान्मुक्तो यथा नर ॥१४॥
पूर्वादय समस्यन्ते चाङ्गिनातु सम तथा ।
एकत्वचानकेनेव, पूर्वकायो यथा भवेत् ॥१५॥
शौण्डादिभिस्तथा प्राग्वत् सप्तम्यन्तं समस्यते ।
यथाक्षेषु नर, शौण्डश्चाक्षशौण्ड इतीर्य्यते ॥१६॥
शाकभूपादिशब्दाना लोपो मध्यपदस्य वै ।
शाक प्रियो यथाभूप शाकभूपो निगद्यते ॥१७॥
नञो नस्यतु लोप स्या दुत्तरेच पदे परे ।
तथानादिपदात् तस्मान्नुट् च नित्य विधीयते ॥१८॥
अब्राह्मणो यथा यो न ब्राह्मण स समुच्यते ।
अनाद्योऽय, तथानश्वो नुटि नित्य विधायते ॥१९॥
कुगतिप्रादयो नित्य समस्यन्ते समर्थके ।
कुत्सित पुरुषो लोके कुपुरुष सोऽभिधीयते ॥२०॥
अत्यादय समस्यन्ते क्रान्ताद्यर्थे द्वितीयया ।
सा तु मात्रामतिक्रान्त सोऽतिमात्रो जनो यथा २१
टजन्ताह सखिश्च स्याद्राजाह्नस्तथैव तथा ।
तत्पुरुषे, सुराजश्च महाराजो यथा भवेत् ॥२२॥

अव्ययीभावः ।

अव्ययं यत्समर्थेन सुबन्तेन समस्यते ।
प्रथितःसोऽव्ययीभावोऽनुरामं मुनयो यथा ॥१॥
समासे प्रथमान्तेन दिष्टं यदुपसर्जनम् ।
उपसर्जनस्य पूर्वं स्यात् प्रयोगस्तत्र सर्वदा ॥२॥
अदन्तादव्ययीभावात्सुलोपो विधीयते ।
पञ्चमीन्तु विना तस्यामादेशश्च प्रकीर्तितः ॥३॥
अमादेशस्तृतीयायाः सप्तम्या बहुलो मतः ।
निर्मक्षिकं सुमद्रञ्चो-पकृष्णोपकृष्णकम् ॥४॥
प्रायो मतोऽव्ययीभाव समासस्तु नपुंसकम् ।
प्रत्यक्षञ्च यथाशक्ति मानवो यतते यथा ॥५॥
सादेशश्च सहस्यात्र नित्यं कालं विना भवेत् ।
सचक्रं साग्नि सक्षत्र मनुज्येष्ठं यथास्मृतम् ॥६॥
समासान्तोऽत्र टच प्रोक्तः शरदादिभ्य एव हि ।
यथोपशरदं रामं उवाच प्रतिविपाशकम् ॥७॥
अन्नन्तादव्ययीभावात् प्रत्ययष्टच् विधीयते ।
तथा नान्तस्य टेर्लोपोऽध्यात्मं स्याच्चाधिराजकम् ॥८॥

द्वन्द्व ।

द्विचादिपदसंघातो सर्वशब्दप्रधानकः ।
चार्थपूर्णः सदाद्वन्द्व समासः स प्रकीर्तितः ॥ १ ॥

ध्यायेद् यथा नरो नित्य मुक्तये शिवकेशवौ ॥१२॥
चवर्गान्तात्तथा द्वन्द्वाद् दषहान्ताच्च टञ् भवेत् ।
त्वक्स्रजञ्च समाहारे वाक्त्विषं वाक्त्वचयथा १३॥
प्राण्यङ्गतूर्य्यसेनाङ्गवाचके तु पदे सदा ।
समासे विहिते द्वन्द्वे लिङ्गञ्चापि नपुंसकम् ॥१४॥
एकत्ववाचकं तत्र पदं नित्यं प्रयुज्यते ।
पाणिपादं यथा मार्दङ्गिकपाणविकं तथा ॥१५॥
बदरामलकञ्चैव रथिकाश्वारोहकम् ।
इत्यमन्यत् सदा ज्ञेयं तस्योदाहरणं बुधैः ॥१६।

कर्म्मधारयः ।

विशेष्यस्य समं यत्र समासो यो विशेषणैः ।
सचासौचापि सम्प्रोक्तः समासः कर्म्मधारय. ॥१॥
नीलोत्पलं नृसिंहश्च गौरोपमा' कमलाननम् ।
विद्याधनञ्च विज्ञेयं तस्योदाहरणं यथा ॥२॥

बहुव्रीहिः ।

स्वाभिप्राय विधायाशु बोधयेद् य' पदान्तरम् ।
बहुव्रीहिः सविस्तारो यथा पीताम्बरो हरिः ॥१॥
येन यस्मै च यस्माच्च यस्य यस्मिंश्च वा यथा ।
इत्यादिलक्षणैर्नित्यं बहुव्रीहिः प्रसाध्यते ॥२॥
कृतकृत्यो हिवाहूश्च दत्तवित्तो हि मानव ।
सपुत्रो निर्धनो याति विदेशं सार्थकामतः ।

बहुव्रीहिसमासेन सिद्ध शब्दो निरन्तरम् ।
विशेष्यायत्तलिङ्गादि ज्ञातव्यस्तु मनीषिभि ॥४॥
कुरङ्गाक्षी सुकेशीय कृतकार्य्या पतिव्रता ।
स पूज्य शङ्कर देव स्वालय त्वरित गता ॥५॥
चन्द्रमौलिमुखं चारु लोचन वीक्ष्य सादरम् ।
गौरी हृष्टाऽभवत्तूर्णं चकोरीव सुधाकरम ॥६॥
सहपूर्वपदश्चापि बहुव्रीहि निंगद्यते ।
सदर्पो रामचन्द्रोऽयं वन याति सलक्ष्मण ॥७॥
केशाकेशि सुयोधाना खड्गाखड्गि विचेष्टितम् ।
रणाङ्गणेषु जिष्णूना भवत्येव परस्परम् ।८॥
बहुव्रीहौ च पूर्वं स्यात् सप्तम्यन्त विशेषणम् ।
कण्ठे कालोऽस्ति यस्यासौ कण्ठेकाल शिवो यथा॥९॥
अदन्ताच्च हलन्ताच्चालुक् सप्तम्यास्तु नामनि ।
त्वचिसारो यथा वंश सदा पीताम्बरो हरि ॥१०॥
पुंवद्भाषितपुंस्काच्चानूङ् स्त्रिया स्यात् समस्थगे ।
स्त्रिया, न तु प्रियादौ हि पूरण्याश्च कदाचन ॥११॥
चित्रगू रूपवद्भार्य्यो जनोऽय प्रथितो भुवि ।
कल्याणी पञ्चमी यासा कल्याणीपञ्चमाशचरा ॥१२
स्वाङ्गवाचकसक्थ्यक्ष्णोर्बहुव्रीहौ तु षच् मत ।
पद्माक्षीयं कुरङ्गाक्षी, दीर्घसक्थो यथा जन ॥१३॥
द्वित्रिभ्यां षोऽभवेन्मूर्ध्नो द्विमूर्धोऽयं नरोयथा ।

लोम्नाऽवन्तर्बहिर्भ्याञ्च बहिर्लोमो यथा मनः ॥१४॥
पल्लोपं पादशब्दस्योपमानाद्धस्तिवर्जितात् ।
तथा सङ्ख्यासुपूर्वस्य व्याघ्रपाच्च सुपाद्यथा ॥१५॥
चतुर प्रभृतिभ्य स्याद् व्यूढोरस्को यथा जन ।
निष्ठान्त तत्र पूर्व स्यात् युक्तायोगो यतो सदा ॥१६॥

द्विगु ।

संख्यापूर्वो द्विगुर्ज्ञेय एकवद्भावबोधक ।
अन्योऽप्यनेकवद्भावञ्चापकश्च निगद्यते ॥१॥
आद्ये यथा त्रिलोकीयं तथो पानयमण्डली ।
द्वितीयेऽपि यथा ज्ञेया त्रिलोकाश्च चतुर्दिश ॥२॥

वाच्यपरिवर्तनविधि, प्रदर्शयते ।

कर्तरि प्रत्ययो यत्र क्रिया कर्त्रनुगामिनी ।
कर्तृवाच्य हि तद् वाक्य याति रामो यथा वनम् ॥१॥
कर्मणि प्रत्ययो यत्र क्रिया कर्मानुसारिणी ।
*वाक्य तत्कर्मवाच्य स्याद् गौर्याम नीयते यथा॥२॥
कर्तृवाच्याद् यदा वाक्य कर्मवाच्य विधीयते ।
तृतीया कर्तरि प्रोक्ता कर्मणि प्रथमा तथा ॥३॥
तत्तद्विशेषणे चापि विशेष स्यात्तथाविध ।

* गौरित्यत्र प्रधाने कर्मणि प्रत्ययत्वात्प्रथमा विभक्तिर्विहित तथाचोक्तम् ।
" गौण कर्मणि दुह्यादे प्रधाने नीहृकृष्वहाम् ॥
विभक्ति प्रथमा ज्ञेया द्वितीया च तदन्यत ।

सर्वमन्वत् मम तिष्ठत क्रिया कर्म्मानुयायिनी ॥४॥

अथाकर्मकधातूनामोदाहरणं लक्षणमुच्यते -

* कर्तृनिष्ठं भवेद् धातोः फलं कार्यञ्च यस्य हि ॥
अकर्म्मकं विजानीयात्त तदायुगपद बुधः ॥५॥

यथा च सच्चिदानन्दो निर्विकारो निरञ्जन ।
भुवो भार समुद्धर्तुं प्रादुरासीज्जनार्दनः ॥६॥

फलव्यापारयोरैक्य यदा यस्य न दृश्यते ।
स धातुर्निभिन्न ज्ञेयो बुधैरत्र सकर्म्मक ॥७॥

माधव परमानन्द सर्वकारणकारणम् ।
भजेऽहं केशव नित्य मुक्तये मुक्तिद यथा ॥८॥

सकर्म्मकात् सदा धातो प्रत्यया कर्तृकर्म्मणोः ।
अकर्म्मकात्तथा चोक्ता भावे कर्तरि पण्डितैः ॥९॥

तोयं पिबति यादोऽयं, पीयते तेन वा यथा ।
कटे शेते सुखं कश्चिच्छय्यते वापि केनचित् ॥१०॥

अथभाववाच्यस्य सोदाहरणं लक्षणं, तत्रक्रियाविशेषमभिगद्यते ।

क्रियायाः सतत यत्र केवलं भावबोधकम् ।
भाववाच्य भवेत्तत्राऽन्यपुरुषैकवाचकम् ॥११॥

यथा त्वया मया चात्र स्थीयते ज्ञानहेतवे ।
अन्वेशन विविधे लोके भूधरैस्तस्य सन्निधौ ॥१२॥

---

* तथाचोक्तम् " फलव्यापारयोरेकनिष्ठतायामकर्मकः ।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः " ॥

भावे कर्म्मणि वाच्ये च धातु स्यादात्मनेपदी ।
कर्म्मकर्त्तृप्रधानेऽपि तथा प्रोक्तो मनीषिभि ॥१३॥
चैत्रेण स्थीयते भावे पुस्तक पठ्यते यथा ।
गतेन भिद्यमानो हि भिद्यते तृणकः स्वयम् ॥१४॥
धातो र्विधीयते नित्यं भावकर्म्मार्थवाचिनि ।
यक्प्रत्ययो विशेषेण विषये सार्वधातुके ॥१५॥
लङ्लोटौ लेङ्लिङौ प्रोक्तौ विषय सार्वधातुक ।
ततोऽन्यत्र न तत्रापि विशेषस्तत्र चोद्यते ॥१६॥
परस्मैपदिनो धातो केवल चात्मनेपदे ।
प्रयोग क्रियते नित्य विशेषस्तु क्वचित् क्वचित् १७
दाधाप्रभृतिधातुनामन्त्याकारस्य तत्परः ।
ईकारादेश एव स्याद् यकारे प्रत्यये परे ॥ १८ ॥
दीयते पुस्तकं भावे धीयते च मनो हरौ ।
गीयते च हरे कीर्त्ति पीयते मधुर पय ॥१९॥
ईस्थानेऽयङ् भवेच्छीङो यकारे प्रत्यये क्ङिति ।
पर्य्यङ्के शय्यते श्रान्त यथा रामेण सीतया ॥२०॥

---

९. सकर्म्मकाद्धातो कर्त्तरि कर्म्मणि च तथा अकर्म्मकाद् धातो कर्त्तरि भावे च प्रत्यया भवन्ति ।

११ यत्र क्रियाया निरन्तर भावबोध एव भवति तद्भाववाच्यम् । तत्र क्रियायामन्यपुरुषस्यैकवचनमेव भवतीत्यर्थ ।

१८ अत्र प्रभृतिशब्देन मा [ माङमाने ] गा [ गै शब्दे ] सा [ षोऽन्तकर्म्मणि ] पा [ पा पाने ] स्था चेति धातवो गृह्यन्ते।

तनुधातोस्तु वाकारोऽन्यादेशः प्रत्यये यकि ।
तायते तन्यते विश्वं हरिणा विश्वकर्मणा ॥२१॥
इकारोकारयोर्दीर्घो यकारे प्रत्यये परे ।
चीयन्ते रिपवो नित्यं वाक्यं च श्रूयते यथा ॥२२॥
ऋकारस्यान्तिमस्यापि स्थाने रिङ् स्यात्तथा यकि ।
ऋतश्च क्रियते रम्यं म्रियते यातको यथा ॥२३॥
ऋकारान्तस्य संयोगादे धातोरर्च्छतिस्तथा ।
ऋस्थाने ऽर्विबुधै नित्यं क्रियते प्रत्यये यकि ॥२४॥
स्मर्यतां स्मर्यता विष्णु-र्येन नित्यं विमुक्तये ।
धर्यता सर्यता तूर्णं मन्दिरं मोदहेतवे ॥२५॥
ऋकारस्यान्तिमस्याच्च पवर्गाच्च परस्य वै ।
ईरूरौ क्रमशो ज्ञेयौ यकारे प्रत्यये परे ॥२६॥
नदी तु तीर्यते नावा पयसा पूर्यते घटः ।
ग्रहप्रच्छव्यधां स्थाने गृहपृच्छविधो बुधैः ॥२७॥
आदेशाः क्रमशो ज्ञेया यकारे च तथा यथा ।
गृह्यते वचनं सत्यं पृच्छ्यते कठिनं च यत् ॥२८॥
विध्यते हरिणा व्याधः इज्यते च पुरन्दरः ॥
णिजन्तानां तु धातूनां णिकारस्यान्तिमस्य वै ।
लोपो विधीयते नित्यं यकारे प्रत्यये परे ॥२९॥

---

२४ संयोग आदौ यस्य तादृशस्य ऋकारान्तस्य धातोः ऋकारस्थाने अर् यकारे प्रत्यये परे विबुधैः पण्डितैः क्रियते

क्नाय्यते स्याप्यते क्नूय दृप्यते दग्ध्यते यथा ।
इकारस्य च लोपेन पदमन्यत् प्रसाध्यताम् ॥३०॥
वच्वदो र्यंव्वसोश्चैव स्वब्हो: प्रत्यये यकि ।
अकारेण सम वस्योकारादेशो विधीयते ॥३१॥
उच्यते चोद्यते वाक्यमुप्यते च पटो यथा ।
उह्यते च भरो भृत्यै: सुप्यते चोष्यते मया ॥३२॥
मन्थादीनां नकारस्य लोपः स्यान्मध्यवर्तिनः ।
यकारे प्रत्यये नित्यं मथ्यते दधि राधया ॥३३॥
स्वरान्तेभ्यश्च हनदृग्भ्यां यकश्चेडागमो मतः ।
लुङ्लृटोः स्यङ्जिडोश्चैव विभाषा प्रत्यये यकि ॥३४॥
धातोरन्त्यस्वरस्योपधाह्रस्वस्वरस्य च ।
इटि वृद्धिर्यथा श्रोता श्राविता लुटिश्चायते ॥३५॥
हनो हस्य च घादेश इकारे प्रत्यये परे ।
घानिता रामचन्द्रेण हन्ता वा रावणो यथा ॥३६॥
उपधावर्तिनो ह्रस्वस्वरस्येटि गुणः परे ।
दर्शिष्यते यथा रामो द्रक्ष्यते,ऽथ मया कदा ॥३७॥
आकारान्तस्य धातो स्यादिकारे दागम परे ।

३३ मन्थ, दन्श्, भ्रन्स, [illegible], [illegible], इत्येषां धातूनां मध्यवर्तिनो नकारस्य यकारे परे लोपो ज्ञातव्यः ।
३४ ३५ स्वरान्तादिधातूनां [illegible] इकारे चिह्नितपद्ये प्रदर्श्यन्ते ।

ायाय दायिता दाता मुग्धौ चाणिव वा यथा ॥३८॥
प्रदर्श्यते विशेषोऽत्र भावकर्मविधानतः ।
कर्मणश्चि लुङो नित्यं तकारे प्रत्यये परे ॥३९॥
इकारः क्रियते चाशौ रूपधावतिनस्तथा ।
अकारस्य सदा वृद्धिस्तथा चान्त्यस्वरस्य वै ॥४०॥
उपधायाश्चलिङ्गो नित्यं गुणो ह्रस्वस्वरस्य च ।
यथाऽवेदि मया रामोऽभाजि चापं विमुक्तये ॥४१॥
स्वरान्तस्य सदा धातोस्तथा हन्ग्रहदृशां लुङि ।
तासिस्यप्रत्यये कार्यौ लुटा तुल्यौ विधि यथा ॥४२॥
दातात्मा विप्रमाधाय प्रगतः सीतया समम् ।
अघानिषत रामस्य माषोऽशोषत साक्षैः ॥४३॥

| धातु | लुट् | लृट् | लङ् | आशीर्लिङ् | लिट् |
|---|---|---|---|---|---|
| श्रु श्रवणे | श्रोता | श्रोष्यते | अश्रोष्यत | श्रोषीष्ट | शुश्रुवे |
| | श्राविता | श्राविष्यते | अश्राविष्यत | श्राविषीष्ट | |
| ग्रह उपादाने | ग्रहीता | ग्रहीष्यते | अग्रहीष्यत | ग्रहीषीष्ट | जगृहे |
| | ग्राहिता | ग्राहिष्यते | अग्राहिष्यत | ग्राहिषीष्ट | |
| दृशिर् प्रेक्षणे | द्रष्टा | द्रक्ष्यते | अद्रक्ष्यत | दृक्षीष्ट | ददृशे |
| | दर्शिता | दर्शिष्यते | अदर्शिष्यत | दर्शिषीष्ट | |
| हन हिंसागत्योः | हन्ता | हनिष्यते | अहनिष्यत | वधिषीष्ट | जघ्ने |
| | घानिता | घानिष्यते | अघानिष्यत | घानिषीष्ट | |
| दा दाने | दाता | दास्यते | अदास्यत | दासीष्ट | ददे |
| | दायिता | दायिष्यते | अदायिष्यत | दायिषीष्ट | |

रूपाणि प्रभवन्त्येव णिजन्तस्यापि धातुतः ॥६॥
अमन्तानां घटादीनां णिचि वृद्धिर्न भुज्यते ।
धातोरन्त्यमृवर्णस्यैवोपधाकारस्य वै तथा ॥७॥
गुणो जागृधात्वोर्णौ भवत्यन्त्यमृवर्णस्य च ।
यथा जागरयत्येव जरयत्येव वा जनम् ॥ ८ ॥
हनो घातो दुषो दूष इङ्धातोराप् भवेत्तथा ।
शदो दस्य च तादेशः णिचि स्यात्प्रत्यये परे ॥९॥
रुहो हस्य विभाषा स्यात् पादेशश्च परे णिचि ।
रोपयते यथा वृक्षान् रोहयत्यथवा जनः ॥१०॥
ऊष्मान्ते तु स्फुरो धातो राकारो णिचि कथ्यते ।

---

६ अत्र णिजन्तस्यापि धातुतो धातो रूपाणि लटि लोटि लङि लिङि च भ्वादिगणीयधातुतुल्यानि भवन्ति यथा श्रुधातो श्रावयति, श्रावयतु, अश्रावयत् श्रावयेदितिरूपाणि चतुर्षु लकारेषु क्रमशो भवन्ति ।

७ अमन्तानां घटादीनां धातूपधस्य तृतीयोपधावर्तिनोऽकारस्य च वृद्धिर्न भवति । यथा गम् गमयति, दम्=दमयति नम्=नमयति, रम्=रमयति, शम्=शमयति, घट=घटयति व्यथ्=व्यथयति, जन=जनयति, त्वर=त्वरयति क्षप्=क्षपयति ज्वल्=ज्वलयति ।

९ हन् दुष इङ् धातूनां स्थानक्रमशो घात दूष आप—आदेशा भवन्ति । यथा हन्=घातयति, दुष्=दूषयति । अधि+इङ्=अध्यापयति । शदधातो दस्य तादेशो भवति यथा शद=शातयति लटि रूप भवति ।

प्रीधूधात्वोर्नकारः स्याद्विभाषा प्रत्यये णिचि ॥११॥
ऋह्रीप्रभृतिधातुभ्य आकारान्तेभ्य एव च ।
श्रूयते पागमेनात्र ज्ञापयत्यर्पयत्यरम् ॥ १२ ॥
पानार्थस्यापि पाधातोर्यागमः क्रियते बुधैः ।
रक्षार्थस्य तथा तस्य लागमो णिचि सम्मतः ॥१३॥
पाययते जलं धात्री शिशुं पालयते यथा ।
ज्ञापयते सुज्ञान जिज्ञो ज्ञानं ज्ञानविदां वरः ॥१४॥
रञ्जधातोर्नलोपः स्यान्मृगयार्थे परे णिचि ।
मृगान् रजयति व्याधो यथारण्ये मृगार्दनः ॥१५॥
तद्भिन्नार्थे नलोपो नो रञ्जधातोस्तथा मतः ।
तृणदाने यथा व्याधो ग्रामे रञ्जयते मृगान् ॥१६॥
इण्धातोस्तु गमादेशो णिचि नित्यं विधीयते ।
ग्रामे गमयते पुत्रं यथा तातो मुदान्वितः ॥१७॥
ज्ञानार्थस्य तथा तस्य गमादेशो न सम्मतः ।
प्रत्याययति शिवं स्व वस्तुगाथं यथा नरः ॥१८॥

११ स्फुरधातोरुकारस्य आकारो भवति णिचि परतः । यथा स्फुर्—स्फारयति स्फोरयति । प्री—प्रीणयति प्राययति । धू—धूनयति धावयति ।

१२ अस्तिशब्देनात्र अर्थो ज्ञेयः । तथा च ऋ ह्री ब्ली री क्नूयी धातुभ्यस्तथा आकारान्तेभ्यो धातुभ्यः पागमो भवति । यथा ह्री—ह्रेपयति, ऋ—अर्पयति, ब्ली—ब्लेपयति क्नूयी—क्नोपयति, स्था—स्थापयति ध्या—ध्यापयति ।

कर्त्रीनं स्वयं यत्र भयविस्मयबोधनम् ।
भीधातोर्भीष् स्मिधातोश्च स्मापादेशो निगद्यते ॥१९
तत्रात्मनेपदं नित्यं सर्पो भीषयते शिशुम् ।
अन्यत्रैव तु मर्षेण बालं भापयते नरः ॥२०॥
णिजन्तेभ्यश्च धातुभ्यो अयत्याम् प्रत्ययो लिटि ।
तत्र कृभ्वस्धातूनां प्रयोगः क्रमशो भवेत् ॥२१॥
श्रावयामास पुत्रं स्वं जनको धर्मसंहिताम् ।
वा श्रावयाम्बभूव श्रावयाञ्चक्रेऽथवा यथा ॥२२॥
णिजन्तादुत्तरे नित्यं अकारो लुङि जायते ।
तस्याभ्यासो भवत्यत्र णिटा तुल्यं ततोऽपरम् ॥२३॥
अभ्यासादिककार्यञ्च क्रियते यत्नतो बुधैः ।
णिजन्तात् मरात धातोरकारे विहिते सति ।
अन्त्येकारस्य लोपः स्यात् परभागे स्थितस्य हि ॥२४॥
परभागोपधादीर्घमूरो गच्छति लाघवत् ।
णिजन्तधातुपूर्वस्य स्वरो ह्रस्वश्च गौरवम् ॥२५॥
णिजन्तानां तु धातूनां पूर्वाकारस्य वै लुङि ।
ईकारः स्याद् यथानित्यमपीपलदपीपठत् ॥२६॥
पूर्वाकारस्य नेकारः संयुक्ते परवर्णके ।
इकारस्य भवेत्क्वापि न यथाऽलिलपत् प्रभुः ॥२७॥

---

वेधि = अवीविधत् । भेदि = अबीभिदत् । मोचि = अमूमुचत् ।
निन्दि = अनिनिन्दत् । शिक्षि = अशिशिक्षत् । रुचि । अरीरुचत
भासि = अबभासत् । भक्षि = अबभक्षत ।

भ्राजृभासो , त्वरश्चापि नैत्व भवति कुत्रचित् ।
अतत्वरद् यथा कृष्णो यादवान् दु:खसागरात् ॥२८
भ्राजिदीप्यादिधातूनां णिजन्तानां परस्थित ।
उपधास्वरिदीर्घस्वरो वा ह्रस्वो भवेद् तथा ॥२९
अदीदिपद् यथा काम मदिदीपत् कृपा शिव' ।
अबिभ्रजदबभ्राजद् देवान् कृष्ण स्वतेजसा ।३०॥
ऋकारोपधधातूनां णिजन्तानां तथा लुङि ।
विभाषाऽकृतिभेद् स्यादववर्तदवीवृतत् ॥३१॥
स्वपिधातो र्णिजन्तस्य स्थाने सुपि विधीयते ।
असूषुपद् यथा देवान् विभु कृष्ण स्वमायया ॥३२॥
स्थाधातोस्तु णिजन्तस्येकार आस्थानके भवेत ।
अतिष्ठिपद् यथास्थाने देवान् कृष्णो दयार्णव ॥३३
श्रुस्रुप्रभृतिधातूनां णिजन्तानां तथा लुङि ।
पूर्वभागे त्वकारस्य यू भवत. क्रमश सदा ॥३४॥
अदिद्रवद् यथा देवानदुद्रवद्यो रिपु ।
अशिश्रवद् यथा छात्रान् गुरुर्ज्ञानमशुश्रवत् ॥३५॥

---

एवम् रचि=अरराचत् कल्कि=अचकल्कत् भजि=अबीभजत् स्मारि=अससमरत् त्वरि=अतत्वरत् व्यथि=अविव्यथत् श्रथि=अशिश्रथत् ॥

* ३४ प्रभृतिशब्देनाच द्रु, प्रु आदिधातो ग्रहणम् । एतेषां णिजन्त धातूनां पूर्वभागे वर्तमानस्यावकारस्य स्थाने क्रमत इकारोकारौ भवत लुङि। यथा स्रु=असिस्रवत असुस्रवत्। द्रु=अदुद्रवत् अदिद्रवत्। प्रु=अपिप्रवत् अपुप्रवत्।

| धातु | लट् | लिट् | लृट् | लोट् | लुङ् | वाच्य लट् | लुङ् | शतृ वा शानच् | क्त | तुम् | विशेष्यपद | णिजन्त | सनन्त | यङन्त | क्त्वा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अद् (भक्षणे) | अत्ति | आद जघास | अत्स्यति | अत्तु | अघसत् | अद्यते | आदि | अदन् | जग्ध | अत्तु | घास | आदयति | जिघत्सति | " | जग्ध्वा |
| अश् (अशु भोजने) | अश्नाति | आश | अशिष्यति | अश्नातु | आशीत् | अश्यते | आशि | अश्नन् | अशित, | अशितु | अशनम् | आशयति | अशिशिषति | अशाश्यते | अशित्वा |
| अश् (अशू व्याप्तौ) | अश्नुते | आनशे | अशिष्यते | अश्नुतां | आशिष्ट | अश्यते | आशि | अश्नुवान | अशित | अशितु | अशनम् | आशयते | अशिशिषते | अशाश्यते | अशित्वा |
| अस् (असु क्षेपणे) | अस्यति | आस | असिष्यति | अस्यतु | आस्थत् | अस्यते | आसि | अस्यन् | अस्त | असितु | आस | आसयति | असिसिषति | + | असित्वा |
| आस् (उपवेशने) | आस्ते | आसाञ्चक्रे | आसिष्यते | आस्ताम् | आसिष्ट | आस्यते | आसि | आसीन | आसित | आसितु | आसनम् | आसयते | आसिसिषते | + | आसित्वा |
| अञ्ज (व्यक्तौ) | अनक्ति | आनञ्ज | अञ्जिष्यति | अनक्तु | आञ्जीत् | अज्यते | आञ्जि | अञ्जन् | अक्त | अक्तु | अङ्ग | अञ्जयति | अञ्जिजिषति | ० | अङ्क्त्वा |
| इण् (इणगतौ) | एति | इयाय | एष्यति | एतु | अगात् | ईयते | अगायि | यन् | इत | एतु | अयनम् | गमयति | जिगमिषति | ० | इत्वा |
| इङ् (इङ् अध्ययने) | अधीते | अधिजगे | अध्येष्यते | अधीतां, | अध्यैष्ट | अधीयते | अध्यगायि | अधीयान | अधीत | अध्येतु | अध्ययनम् | अध्यापयति | अधिजिगांसते | | अधीत्य |
| कृ (विक्षेपे) | किरति | चकार | करिष्यति | किरतु | अकारीत् | कीर्यते | अकारि | किरन् | कीर्ण | करितु | किरणम् | कारयति | चिकरिषति | चेकीर्यते | कीर्त्वा |
| कृ (डुकृञ् करणे) | करोति | चकार | करिष्यति | करोतु | अकार्षीत् | क्रियते | अकारि | कुर्वन् | कृत | कर्तु | करणम् | कारयति | चिकीर्षति | चेक्रीयते | कृत्वा |
| | कुरुते | चक्रे | करिष्यते | कुरुतां | अकृत | " | " | कुर्वाण | " | " | " | कारयते, | चिकीर्षते | | " |
| क्षि (क्षये) | क्षयति | चिक्षाय | क्षेष्यति | क्षयतु | अक्षैषीत् | क्षीयते | अक्षायि | क्षयन् | क्षीण | क्षेतु | क्षय | क्षाययति | चिक्षीषति | चेक्षीयते | क्षित्वा |

भ्वा गाह (प्रवेशे) गाहते जगाहे गाहिष्यते गाहता अगाहिष्ट गाह्यते अगाहि गाहमान गाहित गाढ गाहितु गाह गाहयते जिगाहिषते जागाह्यते गाहित्वा

" गै (शब्दे) गायति जगौ गास्यति गायतु अगासीत् गीयते अगायि गायन् गीत गातु गानम् गापयति जिगासति जेगीयते गीत्वा

क्र्या ग्रह (उपादाने) गृह्णाति जग्राह ग्रहीष्यति गृह्णातु अग्रहीत गृह्यते अग्राहि गृह्णन् गृहीत ग्रहीतु ग्रहणम् ग्राहयति जिघृक्षति जरीगृह्यते गृहीत्वा

गृह्णीते जगृहे ग्रहीष्यते गृह्णीता अग्रहीष्ट " " गृह्णान " " " जिघृक्षते

अ चक्ष (चक्षिङ्— व्यक्तायांवाचि) चष्टे चख्यौ, चख्ये ख्यास्यति चष्टां अख्यत् त ख्यायते अख्यायि चक्षाण चक्षित ख्यातु

चचक्षे चक्शौ चक्शे ख्यास्यते अक्शासीत् अक्शास्त

दि तुष् (प्रीतौ) तुष्यति तुतोष तोक्ष्यति तुष्यतु अतुषत् तुष्यति अतोषि तुष्यन् तुष्ट तोष्टु तोष तोषयति तुतुक्षति तोतुष्यते तोतोष्टि तुष्ट्वा

भ्वा तृ (प्लवनतरणयोः) तरति ततार तरिष्यति तरतु अतारीत् तीर्यते अतारि तरन् तीर्ण तरितु तर्तुं तरण तारयति तितीर्षति तेतीर्यते तीर्त्वा

भ्वा दह् (भस्मीकरणे) दहति ददाह धक्ष्यति दहतु अधाक्षात् दह्यते अदाहि दहन् दग्ध दग्धु दाहः दाहयति दिधक्षति दन्दह्यते दन्दग्धि दग्ध्वा

ह्वा दा (डुदाञ्दाने) ददाति ददौ दास्यति ददातु अदात् दीयते अदायि ददत् दत्त दातु दान दापयति दित्सति, देदीयते दत्त्वा

दत्ते ददे दास्यते दत्ताम् अदित " " ददानः " " " दापयते दित्सते " "

अ दुह् (प्रपूरणे) दोग्धि दुदोह धोक्ष्यति दोग्धु अधुक्षत् दुह्यते अदोहि दुहन् दुग्धः दोग्धु दोहः दोहयति दुधुक्षति दोदुह्यते दुग्ध्वा

दुग्धे दुदुहे धोक्ष्यते दुग्धां अधुक्षत " " दुहानः " " " " ते "

दृ (आदरे) आद्रियते आदद्रे आदरिष्यते आद्रियतां आदृत आद्रियते आदारि आद्रियमाणः आदृतः आदर्तु आदरः आदरयति आदिदरिषते आदेद्रीयते आदृ

द्विष् (अप्रीतौ) द्वेष्टि दिद्वेष द्वेक्ष्यति द्वेष्टु अद्विक्षत् द्विष्यते अद्वेषि द्विषन् द्विष्ट द्वेष्टु द्वेष द्वेषयति दिद्विक्षति देद्विष्यते द्विष्ट्वा

क्र्या वृ (वृञ्वरणे) वृणाति ववार वरिष्यति,ते वृणातु अवारीत् व्रियते अवारि वृणन् वृत वरितु वर वारयति विवरिषति, वेव्रीयते वृत्वा
वृणीते वव्रे,वव्रे वरीष्यते,ति वृणीतां अवरिष्ट " " विवरिषते

अ शास् (अनुशिष्टौ) शास्ति शशास शासिष्यति शास्तु अशिषत् शिष्यते अशासि शासत् शिष्ट शासितु शासन शासयति शिशासिषति शेशिष्यते शासि
अ शी (शीङ् स्वप्ने) शेते शिश्ये शयिष्यते शेतां अशयिष्ट शय्यते अशायि शयान शयित शयितु शय्या शाययति शिशयिषते शाशय्यते शयित्वा
दि शो (तनूकरणे) श्यति शशौ शास्यति श्यतु अशासीत् अशात् शीयते अशायि श्यन् शितः शातः शातु शान शाययति शिशासति शाशायते शित्वा
भ्वा श्रु (श्रवणे) शृणोति शुश्राव श्रोष्यति शृणोतु अश्रौषीत् श्रूयते अश्रावि शृण्वन् श्रुत श्रोतु श्रावः श्रावयति शुश्रूषते शोश्रूयते श्रुत्वा
भ्वा षञ्ज (षञ्ज सङ्गे) सजति ससञ्ज सङ्क्ष्यति सजतु असाङ्क्षीत् सज्यते असञ्जि सजन् सक्त सक्तु सञ्जन सञ्जयति सिसङ्क्षति सासज्यते सक्त्वा
भ्वा सद् (षद्लृ विशरणगत्यवसादनेषु) सीदति ससाद सत्स्यति सीदतु असदत् सद्यते असादि सीदन् सन्न सत्तु साद सादयति सिषत्सति सासद्यते सत्त्वा
अ सू (षूङ् प्राणिगर्भविमोचने) सूते सुषुवे सोष्यते सविष्यते सूयते असावि सुवानः सूत सोतु सवितु साव सावयति सुसूषते सोषूयते सूत्वा
भ्वा सेव (सेवायां) सेवते सिषेवे सेविष्यते सेवतां असेविष्ट सेव्यते असेवि सेवमान सेवितः सेवितु सेवा सेवयति सिसेविषते सेसेव्यते सेवित्वा
दि सो (षोऽन्तकर्मणि) स्यति ससौ सास्यति स्यतु असासीत् असात् सीयते असायि स्यन् सितः सात सातु सान साययति सिषासति सेषीयते सित्वा
दि स्निह (प्रीतौ) स्निह्यति सिष्णेह सिष्णिहतुः स्नेक्ष्यति स्नेहिष्यति स्निह्यतु अस्निहत् स्निह्यते अस्नेहि स्निह्यन् स्निग्धः स्नेहितु स्नेग्धु स्नेहः
[स्नेहयति सिस्नेहिषति सेष्णिह्यते स्नेहित्वा
भ्वा स्मि (ईषद्धसने) स्मयते सिष्मिये स्मेष्यते स्मयतां अस्मेष्ट स्मीयते अस्मायि स्मयमान स्मित स्मेतु स्मयः स्मापयते स्माययति सिस्मयिषते
[सेष्मीयते स्मित्वा

क्रया. वृ (वृङ्वरणे) वृणाति ववार वारिष्यति,ते वृणातु अवारीत् व्रियते अवारि वृणन् वृत वरितु वर वारयति विवारयिषति, वेव्रीयते वृत्वा
वृणीते ववे,ववरे वरीष्यते,ति वृणीता अवरिष्ट " " विवरिषते

भ शास् (अनुशिष्टौ) शास्ति शशास शासिष्यति शास्तु अशिषत् शिष्यते अशासि शासत् शिष्ट शासितु शासन शासयति शिशासिषति शेशिष्यते शासि
१ शी (शीङ् स्वप्ने) शेते शिश्ये शयिष्यते शेतां अशयिष्ट शय्यते अशायि शयान शयित शयितु शय्या शाययति शिशयिषते शाशय्यते शयित्वा
दि. शो (तनूकरणे) श्यति शशौ शास्यति श्यतु अशासीत् अशात् शीयते अशायि श्यन शितः शातः शातु शान शाययति शिशासति शाशायते शित्वा
भ्वा श्रु (श्रवणे) शृणोति शुश्राव श्रोष्यति शृणोतु अश्रौषीत् श्रूयते अश्रावि शृण्वन् श्रुत श्रोतु श्रावः श्रावयति शुश्रूषते शोश्रूयते श्रुत्वा
भ्वा सञ्ज (षञ्ज सङ्गे) सजति ससञ्ज सङ्क्ष्यति सजतु असाङ्क्षीत् सज्यते असञ्जि सजन् सक्त सङ्क्तु सञ्जन सञ्जयति सिसङ्क्षति सासज्यते सक्त्वा
भ्वा सद् (षद्लृ विशरणे) सीदति ससाद सत्स्यति सीदतु असदत् सद्यते असादि सीदन् सन्न सत्तु साद सादयति सिषत्सति सासद्यते सत्त्वा
अ सू (षूङ् प्राणिगर्भविमोचने) सूते सुषुवे सोष्यते सविष्यते सूयते असावि सुवानः सूत सोतु सवितु साव सावयति सुसूषते सोषूयते सूत्वा
भ्वा सेव (षेवृ सेवायां) सेवते सिषेवे सेविष्यते सेवतां असेविष्ट सेव्यते असेवि सेवमान सेवितः सेवितुं सेवा सेवयति सिसेविषते सेषेव्यते सेवित्वा
दि सो (षोऽन्तकर्मणि) स्यति ससौ सास्यति स्यतु असासीत् असात् सीयते असायि स्यन् सितः सात सातु सान साययति सिषासति सेषीयते सित्वा
दि स्निह (ष्णिह प्रीतौ) स्निह्यति सिष्णेह सिष्णिहतुः स्नेक्ष्यति स्नेहिष्यति स्निह्यतु अस्निहत् स्निह्यत अस्नेहि स्निह्यन् स्निग्धः स्नेहितु स्नेग्धु स्नेहः
[स्नेहयति सिस्नेहिषति सेष्निह्यते स्नेहित्वा
[स्मि ईषद्धसने) स्मयते सिष्मिये स्मेष्यते स्मयतां अस्मेष्ट स्मीयते अस्मायि स्मयमान स्मित स्मेतु स्मयः स्मापयते स्माययति सिस्मयिषते
[सेष्मीयते स्मित्वा

गण धातु लट् लिट् लृट् लोट् लङ् वाच्य लट् लुङ् शत वा शानच् क्त तुम् विशेष्यपद णिजन्त सनन्त यङन्त क्त्वान्

म्या स्वञ (ष्वञ्ज परिष्वङ्गे) स्वजते सस्वजे सस्वञ्ज स्वङ्क्ष्यते स्वजतां अस्वङ्क्त स्वज्यते अस्वञ्जि स्वजमान स्वक्त स्वङ्क्तु स्वङ्ग स्वञ्जयति सिस्वङ्क्षते [सास्वज्यते स्वक्त्वा

थ हन (हन् हिंसागत्योः) हन्ति जघान, हनिष्यति हन्तु अवधीत् हन्यते अघानि अवधि घ्नन् हत हन्तु घात हति घातयति जिघांसति जङ्घन्यते हत्वा

ह्वा हा (ओहाक् त्यागे) जहाति जहौ हास्यति जहातु अहासीत् हीयते अहायि जहत् हीनः हातु हानिः हापयति जिहासति जेहीयते हित्वा

ह्वा हा (ओहाङ् गतौ) जिहीते जहे हास्यते जिहीतां अहास्त हायते अहायि जिहान, हानः हातु हापयति, ते जिहासते जाहायते हात्वा

ह्वा हि (गतिप्रेरणयोः) हिनोति जिघाय हेष्यति हिनोतु अहैषीत् हीयते अहायि हिन्वन् हितः हेतु हितिः हाययति जिघायति जेघीयते हित्वा

ह्वा हु (दानादनयोः) जुहोति जुहाव जुहवाञ्चकार होष्यति जुहोतु अहौषीत् हूयते अहावि जुह्वत् हुतः होतु हुतिः हावयति जुहूषति जोहूयते हुत्वा

भ्वा ह्वे (आङ्पूर्वक आह्वाने) आह्वयति आजुहाव आह्वास्यति आह्वयतु आह्वत् आहूयते आह्वायि आह्वयन् आहूत आह्वातु आह्वान आह्वाययति
आह्वयते आजुहुवे आह्वास्यते आह्वयतां आहत, आह्वास्त आह्वयमान आजुहूषति, ते आजोहूयते आहूय हुत्वा



इतिश्रीकाव्यकण्ठपण्डितद्वारकादत्तात्मजेन हैयाग्रीवेणाठिकृते व्याकरणबोधे प्रथमो भागः समाप्तिमगात् ।

# श्री रामचरितमानस

अर्थात्

## श्री तुलसीकृत रामायण।

यह ग्रन्थ बड़े परिश्रम और यत्न से श्रीतुलसीदास जी की लिखी हुई प्राचीन प्रति में शोध कर ज्यों का त्यों छापा गया है। इस भय से कि कदाचित् कोई इसे अप्रमाण समझे, गोसाईं जी के हाथ की लिखी हुई प्रति के १० पृष्ठ का फोटोग्राफ भी पुस्तक में लगा दिया है, और उस की दृढ़ पुष्टि के लिये गोसाईं जी के हाथ के लिखे हुए पंचनामा का फोटोग्राफ भी इसी के संग है, जिस से लोगों को यह भी न कहना पड़े कि गोसाईं जी के हाथ के लिखे हुए का प्रमाण ही क्या है? कि और लोगों की भांति मैं नहीं चाहता कि इश्तिहार में नीचे से ऊपर तक प्रशंसा ही भर दूं क्योंकि जो इसके गुण ग्राहक हैं उन के लिये इतना ही बहुत है। इस ग्रन्थ में तुलसीदास जी का जीवन चरित्र भी दिया गया है और अक्षर बड़ा औ कागज अच्छा है। यह ग्रन्थ १८ नवम्बर १८८९ को गोरखपुर की प्रदर्शिनी में भी रक्खा गया था और लोगों ने आश्चर्य दृष्टि से देखा। तीन सौ वर्ष पर यह अलभ्य पदार्थ हाथ लगा है, जिन को रामरस के अपूर्व स्वाद लेना हो वे न चूकें और नीचे लिखे हुए पते से मंगा लेवें। नहीं तो अवसर निकल जाने पर पछताना होगा।

मूल्य फोटोग्राफ सहित ६) मूल्य बिना फोटो के ४) डाकमहसूल १॥)

साहब प्रसाद सिंह।

"खड्गविलास" प्रेस बांकीपुर।